जगद्गुरुश्रीटीलाचार्य (श्रीसाकेतनिवासाचार्य) प्रणीतः

# श्रीरामानन्दवेदान्तसारः

## (सिद्धान्तरत्नमाला)

प्रणम्य भाष्यकृद् रामानन्दं, गुरुं च राघवम्।
श्रीरामानन्दवेदान्तसारं वक्ष्ये यथामति।।1।।

तत्त्वज्ञानं च मोक्षे हि मुमुक्षोर्हितकारकम्।
'तद्विज्ञानर्थ'मित्येतच्छ्रुतेरर्ज्यं च तद् गुरोः।।2।।

प्रमाणप्रतिपन्नोऽर्थ बुधैस्तत्त्वं प्रकीर्त्तितम्।
तत्त्वं च द्विविधं प्रोक्तं द्रव्याद्रव्यविभेदतः।।3।।

तत्र द्रव्यमुपादानमद्रव्यं तद्विलक्षणम्।
जडाजडविभेदाच्च द्रव्यं द्विधा मतं बुधैः।।4।।

स्वयम्प्रकाशमजडं जडं तस्माद्विलक्षणम्।
प्रकृतिकालभेदाच्च जडं तत्र द्विधा मतम्।।5।।

विज्ञेया प्रकृतिस्तत्र समगुणत्रयाश्रयः।
चतुर्विंशतिधा सा हि सावयवा मता बुधैः।।6।।
विकारोत्पादकत्वात् सा प्रकृतिरिति कथ्यते।
अविद्या कथ्यते सा हि यतो ज्ञानविरोधिनी।।7।।
मायाऽभिधीयते सा यत् विचित्रसृष्टिकारिणी।
अव्यक्तं सेश्वरेच्छातः कार्योन्मुखी यदा भवेत्।।8।।
महदुत्पद्यतेऽव्यक्तात् त्रिधा तद् गुणभेदतः।
अहङ्कारस्त्रिधा तस्मात् सात्त्विकादिविभेदतः।।9।।
एकादशेन्द्रियाणि स्युः सात्त्विकाहंकृतेः किल।
ज्ञानकर्मेन्द्रियत्वाभ्यां द्विधा तानि मतानि हि।।10।।
ज्ञानप्रसरणे हेतुरादिमं षड्विधं च तत्।
मनःश्रवणचक्षुस्त्वग्रसनघ्राणभेदतः।।11।।
ज्ञानेन्द्रियं सुखादेश्च शब्दादेर्ग्राहकं मतम्।
कर्मण्युच्चारणादौ तु शक्तं कर्मेन्द्रियं खलु।।12।।
वाक्पाणिपादपायूपस्थभेदात् पञ्चधा च तत्।
तामसाहङ्कृतेर्जातं तन्मात्रं शब्दसंज्ञकम्।।13।।
तस्मान्नभस्ततः स्पर्शतन्मात्रं च ततो मरुद्।
ततो रूपं ततश्चाग्निर्जलहेतुस्ततो रसः ।।14।।
जलाद् गन्धस्ततो भूतं जायते क्षितिसंज्ञकम्।
एतैः पञ्चीकृतैर्भूतैरण्डोत्पत्तिर्मता बुधैः।।15।।
त्रिभिः सत्वादिभिर्हीनो जडः कालतया मतः।
द्विविधः सम्मतः कालश्चाखण्डाखण्डभेदतः।।16।।
तत्राखण्डो विभुनित्यो भूतादिबुद्धिकारकः।
अनित्यास्तु मुहूर्त्ताद्या भेदाः खण्डस्य कीर्त्तिताः।।17।।

अजडं तु द्विधा बोध्यं परागप्रत्यग्विभेदतः।
भासमानं परस्मै हि पराक्तत्त्वं द्विधा मतम्॥18॥
तत्र नित्यविभूतिर्हि शुद्धसत्त्वमयी मता।
धर्मभूतं च यज्ज्ञानं तन्मतश्चापरः पराक्॥19॥
अचेतनं मतं ज्ञानं शुद्धसत्वं च पण्डितः।
प्रमाणं तु श्रुतिश्चाद्ये 'त्रिपादस्यामृतं दिवि'॥20॥
मता नित्यविभूतिः सा मुक्तानां ब्रह्मणस्तया।
भोग्यभोगोपकरणभोगस्थानमयी खलु॥21॥
ऊर्ध्वदेशेऽपरिच्छिन्ना साऽधस्तान्न मता तथा।
नित्या चैतन्यहीना च साऽऽनन्दादिपदेरिता ॥22॥
ज्ञातुर्ज्ञेयावभासो हि ज्ञानत्वेन प्रकीर्त्तितः।
धर्मधर्मिविभेदाद्धि ज्ञानं द्विधेति वक्ष्यते॥23॥
आत्मधर्मतया भाति प्रभावत् तत्र चादिमम्।
'सत्यं ज्ञानमि'तिश्रुत्या ज्ञानस्य द्रव्यता मता॥24॥
'न विज्ञातुरि' तिश्रुत्यां श्रुता ज्ञानस्य नित्यता।
ईश्वरे नित्यजीवेषु ज्ञानं नित्यं मतं विभु॥25॥
कर्मावृतं हि बद्धेषु मुक्तेषु प्राक् तदावृतम्।
नष्टोत्पन्नप्रतीतिस्तु सङ्कोचाच्च विकासतः॥26॥
स्वापे ज्ञानतिरोधानं तमोविशेषसन्निधेः।
ज्ञाने द्रव्यत्वसत्त्वेऽपि प्रभेव गुणता मता॥27॥
विषयसत्यताहेतोर्ज्ञाने स्वतःप्रमाणता।
स्वान्यनिर्वाहकत्वेन सूर्यवत् स्वप्रकाशता॥28॥
जीवोऽणुश्चेतनो व्याप्तो ज्ञानेनाखिलवर्ष्मणि।
झटिति तेन जानाति सर्वदेहसुखादिकम्॥29॥

दधाति युगपद् योगी शरीराणि बहूनि च।
यति लोकान्तरं जीव आयात्यत्र ततः पुनः।।30।।
ततो जीवविभुत्वं न मन्यते ज्ञानिभिर्जनैः।
जीवात्मनस्ततोऽणुत्वं दोषहीनं मतं बुधैः।।31।।
अदृष्टं राघवेच्छैव सर्वत्र व्यापकं हि तत्।
ततस्तत् तत् पदार्थास्तु तत्र तत्रोद्भवन्ति च।।32।।
जीवस्य मध्यमे माने त्वनित्यत्वं घटादिवत्।
अकृतस्य च सम्प्राप्तिर्नाशिस्तथा कृतस्य च।।33।।
आत्मनित्यत्ववक्त्रीणां श्रुतीनां च विरोधिता।
अन्यदेहे च सम्प्राप्ते शैथिल्यमात्मनश्च हि ।।34।।
'जानामीति' प्रतीत्या च जीवो ज्ञानाश्रयो मतः।
श्रुतौ ज्ञानस्वरूपत्वं वर्णितं प्रत्यगात्मनः।।35।।
ज्ञानद्वयं मतं तस्माद् धर्मधर्मिप्रभेदतः।
उभयोर्ज्ञानयोर्वेदे वर्णिता नित्यताऽपि च।।36।।
एकनाशे हि नष्टा स्यादिन्द्रियसंघजीवता।
एकैकस्य तु जीवत्वे तत्तन्नाशे विनाशिता।।37।।
मते देहस्य जीवत्वे व्यभिचारो मृते भवेत्।
अनित्यत्वं भवेज्जीवे देहेन सदृशं तथा।।38।।
ममन्द्रियं तनुः प्राणो बुद्धिश्चेतिप्रतीतितः।
मन्यते नात्मनः प्राज्ञैरिन्द्रियादिस्वरूपता।।39।।
श्रुतिस्मृत्यो 'रजोनित्य'मित्येवं नित्यता मता।
प्रत्यगात्माऽजडस्तस्माज् ज्ञेयो ज्ञाता च सम्मतः।।40।।
'सुखमस्वाप्समि'त्येतत्प्रतीत्या सुखरूपकः।
यथेष्टविनियोगार्हः शेषो रामस्य शेषिणः।।41।।

धार्यत्वाच्च नियाम्यत्वादात्मा देहः परात्मनः।
भिन्नो जीवो विभोः स्वस्य चात्मनः परमात्मनः॥42॥

तत्त्वंपदोक्तयोरैक्यं परान्तर्यामिणोः खलु।
'तत्त्वमसी' तिवाक्ये हि नैक्यं जीवेशयोर्मतम्॥43॥

प्रभावतः प्रभातुल्यो विशिष्टस्य विशेषवत्।
ब्रह्मणोंऽशो मतो जीवो जीवस्य ब्रह्मता न तत्॥44॥

प्रतिबिम्बस्त्वविद्यायां जीवश्च ब्रह्मणो ननु।
मैवं सिध्यति नाविद्या ह्याश्रयानुपपतितः॥45॥

प्रतिबिम्बे हि दुःखादेरभावाज्जीवता न च।
मैवं यत् प्रतिबिम्बोऽसौ विद्वद्भिर्बिम्बवन्मतः॥46॥

इति वक्तुं न शक्यं हि कुतश्चेदुच्यते यतः।
सर्वैर्लोकैर्विलोक्यन्ते जीवा दुःखादिसंयुताः॥47॥

न च दुःखादयो बिम्बे निर्विशेषे तु ब्रह्मणि।
प्रतिबिम्बे न जीवत्वं तस्मात् संभवेन्न हि॥48॥

किं च रूपविहीनस्य प्रतिबिम्बो न जायते।
दृश्यते प्रतिबिम्बो नु रूपहीनविहायसः॥49॥

मैवं यत् प्रतिबिम्बोऽसौ प्रकाशादेर्मतो बुधैः।
कुतो नीरूपवायोश्च प्रतिबिम्बो न दृश्यते॥50॥

परिच्छिन्नविधोरेव प्रतिबिम्बो जले खलु।
प्रतिबिम्बः कथं जीवोऽपरिच्छिन्नस्य ब्रह्मणः॥51॥

प्रतिबिम्बोऽस्ति जीवश्चेदेकदेशस्य ब्रह्मणः।
हन्त तदा ह्यनित्यत्वं सांशत्वाद् ब्रह्मणो भवेत्॥52॥

अविद्ययाऽद्वितीयत्वं नश्यति ब्रह्मणो यतः।
नातोऽवच्छेदिकाऽविद्या जीवभावे तु ब्रह्मणः॥53॥

ब्रह्मणो भेदशून्यत्वाज्जीवस्य न विवर्त्तता।
सर्पभ्रमो न सर्पे हि किन्तु रज्जौ बुधैर्मतः।।54।।

आचार्यसार्वभौमेन रामानन्देन धीमता।
वेदान्तदर्शनानन्दभाष्ये जीवास्त्रिधा मताः।।55।।

बद्धा मुक्तास्तथा नित्या बद्धा बद्धाश्च कर्मणा।
रामब्रह्मानुकम्पातः पुण्यात् सतामनुग्रहाद्।।56।।

मुमुक्षा जायते भव्या जीवस्य हृदये शुचौ।
तदा सत्सङ्गतिं कुर्वन् गुरुं चासौ प्रपद्यते।।57।।

रामपादप्रपन्नोऽसौ ततो गुरुमुखाद् भवेत्।
श्रीमद्रामप्रपत्त्या च छिन्नमायान्वयस्ततः।।58।।

ततोऽर्चिरादिमार्गं च याति हार्दानुकम्पया।
ततश्च विरजास्नानाद् दिव्यदेहो भवेद्धि सः।।59।।

साकेते च समाप्नोति रामं ब्रह्म परात्परम्।
स्वं रूपं तत्र सम्प्राप्य रामं चानुभवत्यपि।।60।।

भोगसाम्यमवाप्नोति रामस्य ब्रह्मणस्तदा।
ततो नावर्त्तते मुक्तो मृत्युलोकेऽथ कर्हिचित्।।61।।

"मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते"।
इत्येतद् भगवद्वाक्यं प्रमाणं तत्र चास्ति हि।।62।।

सर्वलोकगतौ शक्तो मुक्तः सृष्ट्यादिवर्जितः।
संसारितां च न प्राप्ता नित्या हनुमादादयः।।63।।

ईश्वरो ब्रह्म रामश्च शब्दा ह्येकार्थबोधकाः।
तत्र वेदान्तिभिश्चोक्तं ब्रह्म हि विभु चेतनम्।।64।।

महान्तं 'विभुमि'त्येवं विभुत्वं ब्रह्मणः श्रुतौ।
विभु ब्रह्म स्वरूपेण स्वभावाच्च मतं बुधैः।।65।।

'ज्ञः कालकाल' इत्येवं श्रुतं ब्रह्म हि चेतनम्।
'वेदाहं समतीतानि' इत्युक्तावपि तादृशम्॥66॥

कालस्य विभुतायां चाचेतनत्वान्न ब्रह्मता।
जीवस्य चेतनत्वेऽपि ब्रह्मता नाविभुत्वतः॥67॥

सदा दोषविहीनश्च स्वत एव हि राघवः।
स्वतः सोऽथ मतो नित्यं कल्याणगुणसागरः॥68॥

रामेऽ'पहतपाप्मे'ति हेया गुणा हि वर्जिताः।
श्रुतास्तु 'सत्यकामश्चे'त्येवं दिव्या गुणाः खलु॥69॥

'एते चान्ये च भगवन् नित्या यत्र महागुणाः।'
इत्येवं रामचन्द्रस्य गुणानां नित्यता मता॥70॥

'स्वाभाविकी'तिवेदोक्तेः स्वाभाविका हरेर्गुणाः।
ब्रह्मस्वभावो नाविद्या तेऽविद्योपाधिका न तत्॥71॥

'तद्यथा रथस्यारेषु' इत्यादिश्रुतिमानतः।
सर्वाधारो मतो रामःप्राणाख्यः परमेश्वरः॥72॥

'स भगव कस्मिन्ने'तच्छ्रुतिवाक्यप्रमाणतः।
स्वे महिम्नि स्थितत्वाद्धि रामाधारो न कश्चन॥73॥

चिदचिदां च सर्वेषां नियन्तृत्वं निरङ्कुशम्।
आन्तरबाह्यभेदाभ्यां द्विधा तत् परमात्मनः॥74॥

अन्तर्यामितया चाद्यं श्रुत्या स्मृत्याऽन्तिमं मतम्।
'एष सर्वेश्वरः' 'एषोऽन्तर्यामी'ति श्रुतेश्च हि॥75॥

'प्रधानक्षेत्रज्ञपतिः' इत्येतच्छ्रुतिमानतः।
रामशेषा मताः सर्वे सर्वशेषी च राघवः॥76॥

सर्वदेहकता रामे 'सर्वात्मे'ति श्रुतौ श्रुता।
'जगत् सर्व शरीरं ते' इतिवाक्ये च ब्रह्मणः॥77॥

तच्चैतन्यापृथक्सिद्धद्रव्यं हि तत्तनुः किल।
रामं प्रति तथा भूताः सर्वे रामतनुर्मताः।।78।।

सर्वकर्मसमाराध्यः सर्वकर्मफलप्रदः।
सर्वदिहश्च सर्वस्थो राम एव न चापरः।।79।।

'यतो वे'यादिरूपेण ब्रह्मणि निखिलात्मनि।
भृगुवल्ल्यां श्रुता रामे जगज्जन्मादिहेतुता।।80।।

उपादानं निमित्तं च जगतो राम एव हि।
निमित्तान्तरसद्भावे कुप्येदद्वयताश्रुतिः।।81।।

वैदिकं संमतं प्राज्ञै रामे च हेतुताद्वयम्।
सृष्ट्यादौ हि श्रुतावुक्तमूर्णनाभिनिदर्शनम्।।82।।

उपादानं यथा ह्यात्मा निमित्तं च सुखं प्रति।
तथोपादानता रामे जगतश्च निमित्तता।।83।।

सूक्ष्माचिच्चिद्विशिष्टो हि रामो विश्वस्य कारणम्।
स्थूलाचिच्चिद्विशिष्टश्च श्रीरामो जगदात्मकः।।84।।

अभेदश्चानयोर्यस्मात् कार्यकारणब्रह्मणोः।
विशिष्टाद्वैतसिद्धान्तः संमतो वैदिकैस्ततः।।85।।

भेदस्य वादिकाश्चाथाभेदस्य वादिकाः खलु।
सङ्गताः श्रुतयश्चात्र सिद्धान्ते युक्तयस्तथा।।86।।

सद्वारकमुपादानं जगतो राघवो यतः।
ततो विकारदोषस्य श्रीरामे सम्भवो न हि।।87।।

रामो विश्वस्य हेतुत्वान्निर्विशेषो न संमतः।
समाधिकनिषेधात् स न मायोपाधिको मतः।।88।।

'तमेव विदित्वा' चेतद्वेदवाक्यप्रमाणतः।
मुमुक्षूणामुपास्यश्च श्रीरामःसकलेश्वरः।।89।।

'रुक्मवर्णमि'तिश्रुत्या रामोऽलौकिकविग्रहः।
दिव्यरूपादिवैशिष्ट्यं 'भारूप' इति तत्र हि।।90।।
''न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा।''
निषिद्धः प्राकृतो देहो रामे दिव्यतनाविति।।91।।
''तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्।।''
वर्जितं प्राकृतं रूपं दिव्यरूपे हराविति।।92।।
''नाकारणात् कारणाद्वा कारणाकारणान्न च।''
इत्याद्युक्तया च रामस्य देहग्रहो निजेच्छया।।93।।
श्रुत्यन्वितश्च सर्वज्ञः सर्वशक्तिः श्रुतिश्रुतः।
मुक्तिदः परया भक्तया श्रिताघं नैव पश्यति।।94।।
साधनसप्तकाज्जाता ज्ञानकर्माङ्गिणी तथा।
रामस्मृतिरविच्छिन्ना भक्तिः संमता बुधै।।95।।
साध्यसाधनभेदाभ्यां सा द्विधा परिकीर्त्तिता।
नवधा साधनभक्तिर्हि श्रवणादिर्मता बुधैः।।96।।
साध्यभक्तिः प्रपत्तिर्हि रामायात्मनिवेदनम्।
प्रारब्धनाशिनी चैषा त्वानुकूल्यादिकाङ्गिनी।।97।।
जनान् संरक्षितुं रामोऽवतारी पञ्चधा स्थितः।
अन्तर्यामी परो व्यूहो विभवोऽर्चावतारकः।।98।।
अनन्तकरुणाशालिसीतया सह शोभितः।
परात्परे च साकेते रामो परतया मतः।।99।।
दिव्यदेहगुणो दिव्यशास्त्रास्त्रभूषणस्तथा।
अर्चिरादिकपद्धत्या संप्राप्यो मोक्षसौख्यदः।।100।।
वासुदेवादयो व्यूहा गुणद्वयविभूषिताः।
उपासितुं जनानां त्त कर्तुं च सर्जनादिकम्।।101।।

मत्स्यादयोऽवताराश्च विभवत्वेन संमताः।

अन्तर्यामी च रामोहि सर्वान्तःस्थः प्रकीर्त्तितः॥102॥

रामस्यार्चावतारस्तु हेमाद्रिप्रतिमातनुः।

षाड्गुण्येन विशिष्टश्च सुलभो मुक्तिदस्तथा॥103॥

अद्रव्यं द्रव्यभिन्नं हि दशधा तत् प्रकीर्त्तितम्।

सत्वं हि ज्ञानकृत् तत्र प्रवृत्तेः कारणं रजः॥104॥

प्रमादमोहहेतुस्तु तमश्च प्रकृतेर्गुणाः।

श्रोत्रस्य विषयः शब्दः स्पर्शस्त्वचश्च संमतः॥105॥

रूपं च चक्षुषस्तद्वद् रसनाया रसो मतः।

घ्राणस्य च मतो गन्धश्चैते व्योमादिपञ्चके॥106॥

शक्तिस्तु हेतुहेतुत्वनिर्वाहिका मता बुधैः।

संयुक्तव्यवहारस्य संयोगः कारणं मतम्॥107॥

शक्तिस्तथा च संयोगः सर्वद्रव्यगुणौ स्मृतौ।

सिद्धान्ते ज्ञानतत्त्वे तु नाद्रव्यत्वं हि संमतम्॥108॥

श्रीसाकेतनिवासाख्यटीलाचार्येण निर्मिता।

सिद्धान्तरत्नमालेयं भूयात् सिद्धान्तबोधिनी॥109॥